# संस्कृत-वार्ताः

दिनाङ्कः - 25-11-2020

प्रातः - 06: 55

<u>मुख्य-वार्ताः</u>

- राष्ट्रपतिः रामनाथ-कोविन्दः अद्य द्विदिवसात्मकस्य अखिल भारतीय-अधिष्ठातृ-सम्मेलनस्य गुजरातस्य केवडियायां उद्घाटनं विधास्यति।
- प्रधानमंत्रिणोक्तं कोविड् सूच्यौषधस्य जनप्राप्तेः पूर्वं सर्वमानकेषु साफल्यं सुनिश्चितं करिष्यते।
- प्रशासनेन त्रिचत्वारिंशत् दूरभाष-चरिष्णुतन्त्राणि प्रतिबन्धितानि।
- कोरोना प्रत्यवाप्तिमितिः सप्त षड् दशमलवोत्तर त्रिनवतिः प्रतिशतं संवृत्ता।
- निवाराख्यः चक्रवातः आन्ध्रप्रदेशस्य समुद्रतटानि अपि प्राप्स्यति इति संसूच्यते।

कोविड आपनिंग

कोरोणामहामार्याः विरुद्धं देशः ऐक्यभावनया युद्धयति। भवन्तोऽपि अस्माभिः सह सुरक्षायाः उपायत्रयस्य संकल्पं स्वीकुर्वन्तु -

मुखावरंक सन्धारयन्तु
सामाजिकदौर्यं परिपालयन्तु,
पाणिपादं च यथासमयं प्रक्षालयन्तु।

राष्ट्रपतिः

राष्ट्रपतिः रामनाथ-कोविन्दः अद्य द्विदिवसात्मकस्य अखिल भारतीय-अधिष्ठातृ-सम्मेलनस्य केवडियायां उद्घाटनं करिष्यति। इदं सम्मेलनं लोकसभा द्वारा आयोज्यते। अस्य वर्षस्य ध्येयमस्ति 'जीवितलोकतन्त्राय विधायिका-कार्यपालिका-न्यायपालिकायाः च कुञ्चिकायाः मध्ये सामञ्जस्यपूर्ण-समन्वयः।' समारोपसमारोहं श्वः प्रधानमन्त्री नरेन्द्रमोदी सम्बोधिष्यति।

प्रधानमन्त्री

प्रधानमंत्रिणोक्तं कोविड् सूच्यौषाधस्य जनप्राप्तेः पूर्वं सर्वमानकेषु साफल्यं सुनिश्चितं करिष्यते। प्रधानमन्त्री नरेन्द्रमोदी समाश्वसयत् यत् सर्वकारः कोविड्नवदशमहामारेः सूच्यौषध-निर्माणप्रक्रियां सूक्ष्मदृष्टया निरीक्षति। श्रोमोदिनोक्तं यत् यथा अस्मिन् महामारिकाले प्रत्येकं जनस्य प्राणरक्षणे अवधानं दत्तम् आसीत् तथैव इदं सूच्यौषधं प्रत्येकं नागरिकं यावत् प्राप्येत इदमपि सुनिश्चितं करिष्यते। सर्वकारेण इदमपि सुनिश्चितं करिष्यते यत् सूच्यौषधकरणं निरन्तरं व्यवस्थितरूपेण भवेत्।

असौ विषाणोः संक्रमण-स्थितिं समीक्षितुं राज्य केन्द्रशासितप्रदेशानां मुख्यन्त्रिभिः सार्धं मन्त्रणां समाचरत्। दृश्य-श्रव्य-प्रणाल्या समनुष्ठिते समुपवेशनेऽस्मिन् श्रीमोदी अब्रवीत् यत् स्वस्थता-मितौ अपचितिं संदृश्य बहवो जनाः संक्रमणस्य शिथिलतायाः अनुमानं कुर्वन्ति। □तदनुमानं असावधानताद्योतकम् अस्ति। प्रधानमन्त्री अवोचत् यत् कोरोणा-सूच्यौषधस्य विकास-प्रक्रिया संजव प्रचलति। तावत् परं आवश्यकता वर्तते सावधानता-परिपालनस्य अपिच संक्रमण-विस्तार नियन्त्रणस्य। अत्रांतरे श्रीमता मोदिना कोरोणोपचार्थं प्रयोक्ष्यमाणानां आवश्यक-चिकित्सा-सामग्रीणां यथावश्यकं उपलम्भनं सुनिश्चितम्।

प्रतिबंधनम्

प्रशासनेन त्रिचत्वारिंशत् दूरभाष-चरिष्णुतन्त्राणि प्रतिबन्धितानि, देशविरोधि गतिविधिषु संलिप्तताकारणेन स्वीकृतोऽस्ति अयं पदक्षेपः। सूचना प्रौद्योगिकीय-मन्त्रालयेन संसूचितम् यत् भारतीय-अन्तर्जाल-अपराध-केन्द्रात् प्राप्तसूचनां आधृत्य अपि च उपकर्तॄणां अनुशंसाधारेण अयं निर्णयः अभिस्वीकृतः अवधेयास्पदं तथ्यमिदं यत् इतः प्रागपि जूनमासस्य ऊनत्रिंशद्दिनांके ऊनषष्ठी दूरभाष-चरिष्णु तन्त्राणि अपिच गत सितम्बरमासस्य द्वितीये दिनांके अष्टादशाधिकैकशतं चरिष्णुतन्त्राणि प्रतिबन्धितानि आसन्।

भारत-अफगानिस्तान

भारतेन अफगानिस्ताने सामदायिकविकास-परियोजनानां चतुर्थचरणस्य प्रारम्भः समुद्घोषितः। □तासामन्तर्गतं अष्टकोटि-डॉलरमिताः परियोजनाः चालयिष्यन्ते। विदेशमन्त्री डॉ. □स्. जयशङ्करः दृश्यश्राव्यप्रणाल्या जेनेवायाम् आयोजिते अफगानिस्तान-सम्मेलने इदम् अब्रवीत्। द्विदिवसात्मक इदं सम्मेलनं ह्यः पूर्णतां यातः। डॉ. जयशङ्करेण अवादि यत् भारतं सद्य □ब्र शतूतजलबन्धनिर्माणाय अफगानिस्तानेन समं सहभागितां कृतवद् अस्ति।

प्रधानमन्त्री-लखनऊ विश्वविद्यालय

प्रधानमन्त्री नरेन्द्रमोदी अद्य दृश्यश्रव्यप्रणाल्या लखनऊ-विश्वविद्यालस्य शततमे स्थापनादिवसे सहभागितां करिष्यति। अस्मिन् अवसरे श्रीमोदी विश्वविद्यालयस्य स्मृतिपणम् अनावरिष्यति। रक्षामन्त्री उत्तरप्रदेशस्य राज्यपालः मुख्यमन्त्री योगीआदित्यनाथश्च अस्मिन् कार्यक्रमे समुपस्थिताः भविष्यन्ति।

राष्ट्रम् महामारी

भारतं कोरोना इति वैश्विक महाव्याधिं विरुध्य अनारतं साफल्यं अधिगच्छति। षडशीति लक्षाधिकाः जनाः साम्प्रतं यावत् स्वास्थ्यलाभम् अवाप्तवन्तः। कोरोना प्रत्यवाप्तिमितिः सप्त षड् दशमलव त्रिनवतिः प्रतिशतं संवृत्ता। पञ्च सहस्रोत्तर-षडाशीति-लक्षाधिकैः स्वस्थीभूयमानैः जनैः साकं प्रत्यवाप्ति-प्रकरणानि सक्रिय प्रकरणानां अपेक्षया विंशति गुणितानि अधिकानि पञ्जीकृतानि। द्वि-चत्वारिंशत् सहस्राधिकाः जनाः विगते अहोरात्रे पूर्णतया स्वास्थ्यलाभम् अवाप्य सकुशलं गृहं उपेताः। किन्तु अस्मिन्नेव काले प्रायः अष्टत्रिंशत्सहस्रं यावत् नूतन प्रकरणानि पञ्जीकृतानि सन्ति। देशे सप्त-षष्ट्यधिक-षट्शतोत्तर-अष्टत्रिंशत्सहस्राधिक-चतुर्लक्षसंख्या-कानि सक्रिय-प्रकरणानि वर्तन्ते।

चक्रवात:

निवाराख्य: चक्रवात: आन्ध्रप्रदेशस्य समुद्रतटानि अपि प्राप्स्यति इति संसूच्यते। आगामिनं दिवसत्रयं यावत् राज्यस्य समुद्रतटवर्तिषु क्षेत्रेषु महद्वृष्टिपातस्य सम्भावना ऋतु-विज्ञान-विभागेनास्ति प्रकटिता। राज्यस्य सम्बद्ध-विभागै:। जनपद-शासनैश्च अधिराज्यं दिवसद्वयाय सञ्चेतना प्रवर्तिता अस्ति। अत्रांतरे धीवराश्चापि समुद्रं नैव गन्तुं सञ्चेतिता: सन्ति।